जलाषाहम् । नौषेवनम् । दुन्दुभिःषेवनम् । अविहितलक्षणो मूर्द्धन्यः सुषामादिषु द्रष्टव्यः । इति सुषामादयः ॥

१८६—न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ॥ अ० ८ । ३ । ११० ॥

रेफपरस्य सकारस्य सृपिसृजिस्पृशिस्पृहिसवनादीनां सस्य मूर्द्धन्यादेशो न भवति । रपर, विस्रंसिका, विस्रब्धः । विसृपः । विसर्जनम् । सुस्पृशम् । निस्पृहम् ।

सवने सवने । सूते सूते । सोमे सोमे । सवनमुखे सवनमुखे । अनुसवनमनुसवनम् । बृहस्पतिसवः । शकुनिसवनम् । संवत्सरे संवत्सरे । मुसलं मुसलम् । गोसनिम् । अश्वसनिम् + ।

इति सवनादयः ॥

१८७—क्षुभ्नादिषु च ॥ अ० ८ । ४ । ३९ ॥

क्षुभ्ना इत्यादि शब्देषु नस्य णकारादेशो न भवति । यथाप्राप्तिनिषेधः । क्षुभ्नाति । क्षुभ्नीतः । क्षुभ्नन्ति । नृनमन । नन्दिन् । नन्दन् । नगर । नरीनृत्यते । तृप्नु । नर्त्तन । गहन । नर्द्दन । निवेश । निवास । अग्नि । अनूप ॥ आचार्यादणत्वं च । आचार्यभोगीनः । आचार्यानी । हायन । इरिकादिभ्यः । वनोत्तरपदेभ्यः संज्ञायाम् ॥

इरिका । तिमिर । समीर । कुवेर । हरि । कर्मार । क्षुभ्नादिराकृतिगणः ॥ इति क्षुभ्नादयः ॥

॥ समाप्तश्चायं ग्रन्थः ॥

---

+ "किंस" इत्यधिकं पुस्तकान्तरे । सं० ॥